# गेयसंस्कृतम्



संस्कृतभारती

बेङ्गलूरु

# गेयसंस्कृतम्

(संस्कृत-गेयगीतानां सङ्ग्रहः)

संस्कृतभारती
बेङ्गलूरु

संस्कृतभारती
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथमं मुद्रणम् - १९९३ - ५०००
द्वितीयं मुद्रणम् - १९९७ - ५,०००
तृतीयं मुद्रणम् - १९९९ - ५,०००
चतुर्थं मुद्रणम् - २००० - ५,०००
पञ्चमं मुद्रणम् - २००३ - ५,०००
षष्ठं मुद्रणम् - २००४ - ५,०००
सप्तमं मुद्रणम् - २००६ - ५,०००
अष्टमं मुद्रणम् - २००७ - १०,०००
नवमं मुद्रणम् - २०१० - १०,०००

मूल्यं - रू. ८.००

मुद्रणम् -
नन्दी प्रोसेस्
त्यागराजनगरम्, बेङ्गलूरु - २८

ISBN - 978-81-88220-06-X

GEYA SAMSKRITAM - A collection of Samskrit songs, written by various authors.Publisher - SAMSKRITA BHARATI - 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 85. Ph : 26721052 / 26722576 E-mail: samskritam@gmail.com

Pages - iv + 28    Price - Rs. 8-00    Ninth Print - April - 2010
Printed at - Nandi Process, Tyagarajanagar, Bangalore - 28

# प्रस्तावना

(प्रथममुद्रणस्य)

एतस्य पुस्तकस्य नाम एव सूचयति यत् अत्र गेयानि गीतानि सङ्गृहीतानि इति । गीतसंस्कृतनाम्ना पूर्वं कानिचन एतादृशानि गीतानि सङ्गृहीतानि आसन् । अनन्तरकाले सृष्टानि लब्धानि च गीतानि सङ्गृह्य एतत् रूपितम् ।

अत्र प्रकाशितानां सर्वेषां गीतानां प्रकाशनार्थम् अनुमतिं प्राप्तुं प्रयत्नः तु कृतः एव । केषाञ्चित् गीतानां रचयितॄन् वयं न जानीमः । पुनः केषाञ्चित् गीतानां रचयितॄणां सङ्केतं न जानीमः । अतः तेषाम् अनुमतिं प्राप्तुं वयं न शक्ताः । अतः तादृशान् गीतरचयितॄन् एतदवसरे क्षमां प्रार्थयामहे, निवेदयामः च यत् अस्माकम् अयं यत्नः सौहार्दभावेन द्रष्टव्यः इति ।

अत्र यानि गीतानि प्रकाशितानि तेषां रचयितृभ्यः, मुद्रणकाराय, तत्सहकारिभ्यः, कलाकाराय च वयं कृतज्ञतां समर्पयामः ।

श्रीमुख सं ।। मार्गशीर्षशुक्लप्रथमा    - प्रकाशकः
१४.१२.९३

(नवममुद्रणस्य)

एतस्य नवमं मुद्रणं यत् प्रचलति तत् महते सन्तोषाय । एतदवसरे सहकृतवतः सर्वान् कृतज्ञतापूर्वकं स्मरामः ।

विकृति सं ।। वैशाखशुक्लतृतीया    - प्रकाशकः
१७.४.२०१०

## गीतानुक्रमणिका



# १. नमो भगवति !

नमो भगवति ! हे सरस्वति !
वन्दे तव पदयुगलम् ।।
विद्यां बुद्धिं वितनु भारति
चित्तं कारय मम विमलम् ।।

वीणावादिनि शुभमतिदायिनि
पुस्तकहस्ते देवनुते ।
वर्णज्ञानं सकलनिदानं
सन्निहितं कुरु मम चित्ते ।। नमो ।।

हंसवाहिनि ब्रह्मवादिनि
करुणापूर्णा भव वरदे ।
मञ्जुलहासिनि नाट्यविलासिनि
लास्यं कुरु मम रसनाग्रे ।। नमो ।।

- गु. गणपय्यहोळ्ळः

## २. संस्कृतस्य सेवनम्

संस्कृतस्य सेवनं, संस्कृताय जीवनम् ।
लोकहितसमृद्धये भवतु तनुसमर्पणम् ।।

कार्यगौरवं स्मरन्
विघ्नवारिधिं तरन्
लक्ष्यसिद्धिमक्षिसात् करोमि सोद्यमः स्वयम् ।
यावदेति संस्कृतं, प्रतिजनं गृहं गृहम्
तावदविरता गतिस्तावदनुपदं पदम् ।। १ ।।

कामये न सम्पदं
भोगसाधनं सुखम्
किञ्चिदन्यदाद्रिये विना न संस्कृतोन्नतिम् ।
गौरवास्पदं पदं, नेतुमद्य संस्कृतम्
बद्धकटिरयं जनो निधाय जीवनं पणम् ।। २ ।।

भाषिता च वागियं
भाषिता भवेद् ध्रुवम्
भाष्यमाणतां समेत्य राजतां पुनश्चिरम्
भरतभूमिभूषणं सर्ववाग्विभूषणम्
संस्कृतिप्रवाहकं संस्कृतं विराजताम् ।। ३ ।।

- जनार्दन हेगडे



## ३. जयतु जयतु संस्कृतम्

जयतु जयतु संस्कृतम्
नयतु नः सुसंस्कृतिम् ।।

अखिलागममूलमिदं
निखिलागमवाक्पदम् ।
सुखदायकमस्माकम्
सखितासम्पादकम् ।। जयतु ।।

रामायणभारतयुतं
पुराणोपपुराणात्मं
नारायणभक्तिपरं
सदाचारास्पदं सदा ।। जयतु ।।

असमानकवित्वभासैः
भासकालिदासकृतैः
रसवत्कवितागुच्छैः
असद्वृत्तिसमुच्छिदम् ।। जयतु ।।

- दो. प्रभाकरशर्मा

## ४. रचयेम संस्कृतभवनम्

ग्रामे नगरे समस्तराष्ट्रे
रचयेम संस्कृतभवनम्
इष्टिकां विना मृत्तिकां विना
केवलसम्भाषणविधया
संस्कृतसम्भाषणकलया ।।
शिशुबालानां स्मितमृदुवचने
युवयुवतीनां मञ्जुभाषणे
वृद्धगुरूणां वत्सलहृदये
रचयेम संस्कृतभवनम् ।। १ ।।
अरुणोदयतः सुप्रभातम्
शुभरात्रिं निशि संवदेम
दिवानिशं संस्कृतवचनेन
रचयेम संस्कृतभवनम् ।। २ ।।
सोदर-सोदरी-भाव-बन्धुरं
मातृप्रेमतो बहुजनरुचिरं
वचनललितं श्रवणमधुरं
रचयेम संस्कृतभवनम् ।। ३ ।।
मूलशिला सम्भाषणमस्य
हिन्दुजनैक्यं शिखरमुन्नतम्
सोपानं श्रवणादिविधानम्
रचयेम संस्कृतभवनम् ।। ४ ।।

– गु. गणपय्यहोळ्ळः



## ५. देहि केशव

देहि केशव देहि माधव
निर्मलचरित ! आशिषम् ।।
त्वत्पदविरचितसत्पथगमनं
चिरकाङ्क्षितमभिलाषम् ।।
मधुरा वाणी सदयं हृदयं
वद मे कथमुपलब्धम् ।।
सुदृढा निष्ठा महती वृत्तिः
वद मे कथमुपलब्धा ।।
हिमवान् फाले जलधिः पादे
वद वै कथमभिदृष्टः ।।
वनमालाङ्कं मुनिभिर्दृष्टं
वद मे कथमभिदृष्टम् ।।
हिन्दुसमाजं शिथिलं दृष्ट्वा
व्यथितं तावकहृदयम् ।।
मामकचित्ते तादृशभावः
भाति कदा गाढं गाढम् ।।
पावनसंस्कृतिगङ्गा प्रवहति
हिन्दोरिहाविरामम् ।।
कण इव तस्मिन् मामकविलयः
वद मे भवति कदा ? ।।

# ६. देहि मेधां सरस्वति

मेधां देहि सरस्वति मातः
वन्दामहे चरणम् ।

मुग्धभावकन्दलिता बाला
यामोऽनिशं शरणम् ।।

वेदशास्त्र-सकलागम-पूजिते
विमलं कुरु नो हृदयम् ।
काव्य-नृत्य-सङ्गीत-कलाविदे
तव पदनिरता वयम् ।।

वीणा-पुस्तक-माला-धारिणि
रसनायां वस सततम् ।
भेदभाव-कल्मष-रहितं तनु
दर्पणसदृशं चित्तम् ।।

– गु. गणपय्यहोळ्ळः



# ७. एहि रे समर्पयेम

एहि रेऽऽ
एहि रे समर्पयेम मित्र ! मातृचरणयोः
तनुतृणं धनचयं, भवतु रुधिरतर्पणम् ।
किं नु पश्यसि त्वदीय-मातृ-वदन-म्लानतां
किमु ह्रिया, त्यज भियं, विक्लवः किमर्पणे ।। एहि रे ।।

मलयमारुतस्त्वदीयस्वागतं विधास्यति
सनातनी परम्परा प्रेरिका भविष्यति ।
भवेम धन्यजीविनः समानचिन्तका वयं
चल पुरः, सह मया, समाश्रय ध्रुवां धृतिम् ।। एहि रे ।।

वीरसूः शूरभूः स्थैर्यधैर्यभूरियं
सखे न भीरुभूरियं न भोगलालसास्पदम् ।
नरोऽप्यवाप्तुमर्हतीह देवतासमानतां
स्मर चिरं, भर धियं, साधयेम विक्रमम् ।। एहि रे ।।

राष्ट्रमुद्धर्तुमेहि ध्येयसाधनव्रत !
मन्युरस्तु बलिपशुः कार्यदीक्षितो भव ।
धर्मसक्त कर्मनिष्ठ ऋषिकुलोद्भव सखे
धर धुरं, दृढमते, याम ध्येयसिद्धये ।। एहि रे ।।

– श्री जनार्दन हेगडे

# ८. जयतु जननी

जयतु जननी जन्मभूमिः पुण्यभुवनं भारतम्
जयतु जम्बूद्वीपमखिलं सुन्दरं धामामृतम् ।
पुण्यभुवनं भारतम् ।।

धरित्रीयं सर्वदात्री शस्यसुफला शाश्वती ।
रत्नगर्भा कामधेनुः कल्पवल्ली भास्वती ।
विन्ध्यभूषा सिन्धुरशना हिमगिरिशिखा शर्मदा ।
रम्य-गङ्गा-सङ्गयमुना महानदीह नर्मदा
कर्मतपसां सार्थतीर्थं प्रकृतिविभवालङ्कृतम् ।। जयतु ...।।

आकुमारी-हिमगिरेर्नो लभ्यते सा सभ्यता ।
एकमातुः सुतास्सर्वे भाति दिव्या भव्यता ।
यत्र भाषा-वेष-भूषा-रीति-चलनैर्विविधता ।
तथाप्येका ह्यद्वितीया राजते जातीयता ।
ऐक्य-मैत्री-साम्य-सूत्रं परम्परया सम्भृतम् ।। जयतु...।।

आत्मशिक्षा-ब्रह्मदीक्षा-ज्ञानदीपैरुज्ज्वलम् ।
योग-भोग-त्याग-सेवा-शान्ति-सुगुणैः पुष्कलम् ।
यत् त्रिरङ्गं ध्वजं विदधत् वर्षमार्षं विजयते ।
सार्वभौमं लोकतन्त्रं धर्मराष्ट्रं गीयते ।
मानविकता-प्रेमगीतं विबुधहृदये झङ्कृतम् ।। जयतु ... ।।

**– हरेकृष्णमेहेरः**



# ९. अमृतस्य पुत्रा वयम्

अमृतस्य पुत्रा वयं
सबलं सदयं नो हृदयम् ।।

गतमितिहासं पुनरुन्नेतुं
युवसङ्घटनं नवमिह कर्तुम् ।।
भारतकीर्तिं दिशि दिशि नेतुं
दृढसङ्कल्पा विपदि विजेतुम् ।। १ ।।

ऋषिसन्देशं जगति नयेम
सत्त्वशालिनो मनसि भवेम ।
कष्टसमुद्रं सपदि तरेम
स्वीकृतकार्यं न हि त्यजेम ।। २ ।।

दीनजनानां दुःखविमुक्तिं
महतां विषये निर्मलभक्तिम् ।।
सेवाकार्ये सन्ततशक्तिं
सदा भजेम भगवति रक्तिम् ।। ३ ।।

**– गु. गणपय्यहोळ्ळः**

# १०. संस्कृतेन पाठनम्

संस्कृतेन पाठनं संस्कृताय जीवनम् ।
संस्कृतेन पाठनं संस्कृताय अर्पणम् ॥

एकैकपदमपि निक्षिपाम तत्पथे
प्रत्यूहकण्टकम् उत्खनाम तत्पथे
लक्ष्यमुन्नतं तदा प्राप्नुयाम तत्पथे ॥ संस्कृतेन ॥

चिन्तितं व्रतमिदम् आचराम जीवने
स्वीकृतं व्रतमिदं न त्यजाम जीवने
परजनैरपि व्रतं कारयाम जीवने ॥ संस्कृतेन ॥

संस्कृतेन चिन्तनं मानसोल्लासनम्
संस्कृतेन लेखनं सर्वकार्यसाधनम्
संस्कृतेन भाषणं भरतवर्षभूषणम् ॥ संस्कृतेन ॥

**- जि. महाबलेश्वरभट्टः**



# ११. वन्दे भारतमातरम्

वन्दे भारतमातरं वद, भारत ! वन्दे मातरम्
वन्दे मातरं, वन्दे मातरं, वन्दे मातरम् ॥

जन्मभूरियं वीरवराणां त्यागधनानां धीराणाम्
मातृभूमये लोकहिताय च नित्यसमर्पितचित्तानाम् ।
जितकोपानां कृतकृत्यानां वित्तं तृणवद् दृष्टवताम्
मातृसेवनादात्मजीवने सार्थकतामानीतवताम् ॥१ ॥

ग्रामे ग्रामे कर्मदेशिकास्तत्त्ववेदिनो धर्मरताः ।
अर्थसञ्चयस्त्यागहेतुको धर्मसम्मतः काम इह ।
नश्वरबुद्धिः* क्षणपरिवर्तिनि काये, आत्मन्यादरधीः
जातो यत्र हि स्वस्य जन्मना धन्यं मन्यत आत्मानम् ॥ २ ॥

मातस्त्वत्तो वित्तं चित्तं स्वत्वं प्रतिभा देहबलम्
नाहं कर्ता, कारयसि त्वं, निःस्पृहता मम कर्मफले ।
अर्पितमेतज्जीवनपुष्पं मातस्तव शुभपादपले
नान्यो मन्त्रो नान्यचिन्तनं नान्यद्देशहिताद्धि ऋते ॥ ३ ॥

**-जनार्दन हेगडे**

---

* अत्र विसर्गस्य पूर्णोच्चारणं करणीयम् । (शर्परि विसर्जनीयः - ८.३.३५)

# १२. प्रभुणा प्रेषिता वयम्

विश्वमखिलमुद्धर्तुममी निर्मिता वयम् ।
मानवं समुद्धर्तुममी प्रेषिता वयम् ।
हरिणा निर्मिता वयम् ।। ध्रु ।।

सङ्कटाद्रिभिदुरं धैर्यं धार्यमनिशमिदमिह कार्यम् ।
मातरं प्रतिष्ठां नेतुं तनुभृतो वयम् ।
प्रभुणा प्रेषिता वयम् ।। १ ।।

मातृभक्तिरेकं ध्येयं, तत्कृते शरीरं देयम् ।
क्षुद्रलालसापरिमुक्ताः सेवका वयम् ।
प्रभुणा प्रेषिता वयम् ।। २ ।।

जानते भरतभुवि लोकाः, आत्मतत्त्वमिह गतशोकाः ।
इत्यवेत्य जगदुद्धरणे योजिता वयम् ।
प्रभुणा प्रेषिता वयम् ।। ३ ।।

ईश्वरः स्फुरति नः स्वान्ते अज्ञानान्धतमसस्यान्ते ।
तस्य कार्यमधुना कर्तुं सोद्यमा वयम् ।
प्रभुणा प्रेषिता वयम् ।। ४ ।।

निश्चितं यशः परिपूर्णं लप्स्यतेऽत्र जन्मनि तूर्णम् ।
ईशकार्यकरणे निरताः सन्ततं वयम् ।
प्रभुणा प्रेषिता वयम् ।। ५ ।।



# १३. विधेयं संस्कृतरक्षणम्

संस्कृतस्य रक्षणाय बद्धपरिकरा वयम् ।
संस्कृतेः प्रवर्धनाय दृढनिधिर्भवेदिदम् ।।

संस्कृतस्य महिमवर्णनेन नास्ति साधितं
सततसम्भाषणेन तस्य जीवनं स्थिरम् ।
जनमुखेन भाषितं ननु जगति जीवितं
राजते चिरं समस्तराष्ट्रमान्यतास्पदम् ।। १ ।।

संस्कृतस्य सेवनं मातृसेवासमं
तेन सम्भाषणं वाङ्मातृपूजनम् ।
मातृभिः प्रवर्तनेन मातृभाषा परं
सरलसम्भाषणेन लसति बालादृतम् ।। २ ।।

राजपोषणात् पुरा नीतमिदं वैभवं
लोकशक्तिकेन्द्रितं स्थास्यतीह केवलम् ।
शिक्षकास्तदर्थमेव त्यागशालिनः स्युः
संस्कृतोज्जीवनाय प्राप्तजीवना ध्रुवम् ।। ३ ।।

– गु. गणपय्यहोळ्ळः

## १४. जय भारतजननी

भारमाता बुधजनगीता
निर्मलगङ्गाजलपूता ॥
शिरसि विराजित-हिमगिरिमुकुटम्
चरणे हिन्दु-महोदधि-सलिलम्
जघने सस्य-लता-तरु-वसनम्
जय भारतजननी ॥ १ ॥

ऋषिवर-घोषित-मन्त्र-पुलकिता
कविवर-गुम्फित-पावन-चरिता
धीर-वीर-नृप-शौर्य-पालिता
जय भारतजननी ॥ २ ॥

मम मनसि सदा तव पदयुगलम्
संस्कृत-संस्कृति-सतत-चिन्तनम्
भाव-राग-लय-ताल-मेलनम्
जय भारतजननी ॥ ३ ॥



## १५. अवनितलं पुनरवतीर्णा स्यात्

अवनितलं पुनरवतीर्णा स्यात्
संस्कृतगङ्गाधारा
धीरभगीरथवंशोऽस्माकं
वयं तु कृतनिर्धाराः ॥

निपततु पण्डितहरशिरसि
प्रवहतु नित्यमिदं वचसि
प्रविशतु वैयाकरणमुखं
पुनरपि वहताज्जनमनसि
पुत्रसहस्रं समुद्धृतं स्यात्
यान्तु च जन्मविकाराः ॥ धीरभगीरथ ... ॥

ग्रामं ग्रामं गच्छाम
संस्कृतशिक्षां यच्छाम
सर्वेषामपि तृप्तिहितार्थं
स्वक्लेशं न हि गणयेम
कृते प्रयत्ने किं न लभेत
एवं सन्ति विचाराः ॥ धीरभगीरथ .... ॥

या माता संस्कृतिमूला
यस्या व्याप्तिस्सुविशाला
वाङ्मयरूपा सा भवतु
लसतु चिरं सा वाङ्माला
सुरवाणीं जनवाणीं कर्तुं
यतामहे कृतिशूराः ॥ धीरभगीरथ ..... ॥

– डा॰ नारायणभट्टः

## १६. जय नमो विधिरमणि

जया नमो विधिरमणि भुवनमोहिनि वाणि
अभयदायिनि जननि अव सदा कल्याणि ॥

वन्दामहे नयन-कलित-करुणा-वीचि
मन्देह-तिमिर-निर्दलन-सूर्यमरीचि ।
छन्दोमयि प्रभवसीति मुनिनाऽवोचि
इन्दीवराक्षि तनुगात्रि विष्वद्रीचि ॥ १ ॥

भ्राजत्प्रभे त्वमसि कुशलरवये प्राची
व्याजाद्विना स्फुरसि कविषु धीनाराची ।
तेजस्विनां सुमतिमयि विधेहि घृताचि
ओजोबलं वितनु सततमस्मद्वाचि ॥ २ ॥

श्रोणीतटे लसति कनकभासुरकाञ्ची
पाणौ ध्वनन्मधुर-गीत-चारु-विपञ्ची ।
एणीदृशां भुवि न कापि तव सध्रीची
शोणानि मा कुरु पदानि ते तिर्यञ्चि ॥ ३ ॥

- गु. गणपय्यहोळ्ळः



## १७. जागृहि जागृहि

जागृहिऽऽ जागृहिऽऽ
भरतपुत्र लोकमित्र जागृहिऽऽ
क्षात्रतेजसा समेत्य निर्भयं पुरः सरन्
मातृसेवनं विधातुमेहि स्वं समर्पयन् ॥

स्मर सदापि हिमगिरेस्तुङ्गतामकम्पिताम्
पश्य वीर वारिधेः परमगम्भीरताम्
किं नु लोकधारिणी धरणिरेति खिन्नताम्
द्वन्द्वभावनां विभिन्दि छिन्दि जाड्यजालिकाम् ॥ १ ॥

सत्कुलप्रसूत मौनमास्थितः कुतश्चिरं
दीपय ध्येयदीपमात्मनो हृदन्तरे
ध्येयसङ्गतैस्समेत्य विचिनु कार्यमार्गम्
मोहबन्धनं विधूय कुरु समष्टिचिन्तनम् ॥ २ ॥

देशधर्मसंस्कृती रक्षयन् विवर्धयन्
पतितमुद्धरन् प्रयाहि जहिहि भेदभावनाम्
चरमलक्ष्यमस्तु जन्मभूमिपरमवैभवम्
मातृसेवया कुरुष्व सार्थकं स्वजीवनम् ॥ ३ ॥

- जनार्दन हेगडे

## १८. पुरः पुरः प्रयाहि

पुरः पुरः प्रयाहि रे
प्रगाय मातृवन्दनम् ।
स्वजन्मभूमिरक्षणे
प्रदेहि वीर जीवनम् ।।

प्रयाहि देशगौरव
स्वराष्ट्रकेतुमुद्धरन्
पदं पदं प्रगच्छ रे
विजेतृभावमुद्वहन् ।।

शिरोऽस्तु ते समुन्नतं
तवास्तु मा क्वचिद् भयम् ।
प्रभुस्तवास्ति पार्श्वतः
सुशस्त्रसज्जितः स्वयम् ।।

पुरः पुरः प्रधाव रे
बलं तवाद्य वर्धताम् ।
यतः प्रभुस्ततो जयः
ततः सुवीर युध्यताम् ।।

रणे धृतिः सुकौशलं
प्रवर्धतां मनोबलम् ।
जयस्तवास्ति निश्चितः
कुरु स्वधर्मपालनम् ।।

- नरेन्द्रः



## १९. जय जय हे भगवति

जय जय हे भगवति सुरभारति
तव चरणौ प्रणमामः ।
नादब्रह्ममयि जय वागीश्वरि
शरणं ते गच्छामः ।। जय ।।

त्वमसि शरण्या त्रिभुवनधन्या
सुर-मुनि-वन्दित-चरणा
नवरसमधुरा कवितामुखरा
स्मित-रुचि-रुचिराभरणा ।। जय ।।

आसीना भव मानसहंसे
कुन्द-तुहिन-शशि-धवले
हर जडतां कुरु बोधिविकासं
सित-पङ्कज-तनु-विमले ।। जय ।।

ललितकलामयि ज्ञानविभामयि
वीणा-पुस्तक-धारिणी
मतिरास्तां नो तव पदकमले
अयि कुण्ठाविषहारिणि ।। जय ।।

# २०. संस्कृतभाषा सरला सुलभा

संस्कृतभाषा सरला सुलभा
माता मम सा पुत्रवत्सला ॥

भाषणमनया दशदिनसाध्यं
तोषकरं ननु सरलतरम् ।
स्यात् संस्कृततो नवता समता
मधुरो भावो देशहितम् ॥

उटजनिवासी भवनावासी
वृद्धो शिशुरपि तरुणगणोऽपि ।
यो वा को वा भारतवासी
अर्हति भवितुं संस्कृतभाषी ॥

सन्तु हि दोषाः प्रथमे घट्टे
सिध्यति शुद्धिर्यत्नबलात् ।
मास्तु भयं हृदि शङ्का लज्जा
यत्नः क्रियताम् अनवरतम् ॥

अविरतसेवा वाचा पूजा
संस्कृतमातुर्भवतु चिरम् ।
जनपदभाषा भारतभूषा
संस्कृतभाषा जयतुतराम् ।

**- जनार्दन हेगडे**



# २१. द्वयमेतन्मम जीवनम्

भारतसंस्कृतिः संस्कृतभारती
द्वयमेतन्मम जीवनम् ॥

यत्र मुनीनां शमकलितानां मङ्गल-मन्त्रनिनादः ।
यत्र कवीनां मृदुभणितीनां मञ्जुलकाव्य-विनोदः ॥१॥

यस्याः कीर्तिपताका सततं प्रचरति विश्वमशेषम् ।
यस्याः संस्तवलेशत एव विन्दति चित्तमकलुषम् ॥ २ ॥

यस्याः प्रवहति वेदोपनिषद्-गीताजलमतिरुचिरम् ।
यस्याः प्रभवति भाषासन्ततिरमिताकारा सुचिरम् ॥ ३ ॥

यस्यै जीवनसमयो नीतः शङ्करमध्वमुनीनाम् ।
यस्यै कविताकर्म समर्पितमतुलं व्यासमुखानाम् ॥ ४ ॥

यया जनानां योगरतानां विकसितमात्मज्ञानम् ।
यया कलानां नाट्यगतानां विस्तृतमखिलविधानम् ॥ ५ ॥

यां परिपातुं परमतबाधाद् अनवरतं यतनीयम् ।
यामिह नेतुं सुललितमार्गे सङ्घटनं करणीयम् ॥ ६ ॥

या गङ्गाजल-पुण्यतरङ्गैर्वहति पवित्रितगात्रम् ।
या कुलभवने परिजनवदने लसति घनादरपात्रम् ॥ ७ ॥

**- गु. गणपय्यहोळ्ळः**

## २२. शूरा वयम्

शूरा वयं धीरा वयं वीरा वयं सुतराम्
गुणशालिनो बलशालिनो जयगामिनो नितराम् ।।

दृढमानसा गतलालसाः प्रियसाहसाः सततम्
जनसेवका अतिभावुकाः शुभचिन्तका नियतम् ।। १ ।।

धनकामना सुखवासना न च वञ्चना हृदये
ऊर्जस्वला वर्चस्वला अतिनिश्चला विजये ।। २ ।।

गतभीतयो धृतनीतयो दृढशक्तयो निखिलाः
यामो वयं समराङ्गणं विजयार्थिनो बालाः ।। ३ ।।

जगदीश हे परमेश हे सकलेश हे भगवन्
जयमङ्गलं परमोज्ज्वलं नो देहि परमात्मन् ।। ४ ।।



## २३. इदं हिन्दुराष्ट्रम्......

अभिमानविचारोऽयं मम यत्
इदं हिन्दुराष्ट्रम् ।
ऋषिमुनिकविभिः पाश्चात्त्यैरपि
नुतं सर्वश्रेष्ठम्, इदं हिन्दुराष्ट्रम् ।।

माता भूमिः, पुत्रोऽहम् मातुः कार्यासक्तोऽहम् ।
त्यागात्तापात् तनुजातानां नश्यति नैव सुखम्
।। इदं हिन्दुराष्ट्रम् ।।

यस्यां गङ्गा अवतरति, देवो हि जनानुद्धरति
यस्यां जातः सञ्चितपुण्यैः लब्धे स्वर्गे सञ्चरति
देवानामपि जननं यत्र विद्यतेऽभीष्टम्
।। इदं हिन्दुराष्ट्रम् ।।

आर्यं विश्वं करणीयं मुनिभिर्दृष्टः स्वप्नोऽयम्
तत्कुलजातैरस्माभिः सर्वमिदं हृदि धरणीयम्
येन भवेदखिलेऽपि प्रपञ्चे पुनः सर्वमान्यम्
।। इदं हिन्दुराष्ट्रम् ।।

**- डा॰ नारायणभट्टः**

# २४. संस्कृतभाषा सरला मधुरा

संस्कृतभाषा सरला मधुरा
सकलजनहिता सादरणीया ।।

उचितावसरे सुव्याहारे
सद्व्यवहारे साधुविचारे
सरसविनोदे सुजनामोदे
सर्वानन्दे श्रेयःसुपदे ।। संस्कृत .... ।।

जात्युद्धरणे नीत्याख्याने
सत्यभाषणे मत्युत्थाने
नवपदरचने नव्यतापने
नानाचरणे न्यायवर्तने ।। संस्कृत .... ।।

भेदापगमे द्वेषोपशमे
दोषापनये साम्योपनये
धर्मरक्षणे ज्ञानवर्धने
विश्वशान्तये समैक्यकार्ये ।। संस्कृत .... ।।

- दो. प्रभाकरशर्मा



# २५. भारतधरणी

सर्वेषां नो जननी
भारतधरणी कल्पलतेयम्
जननी-वत्सल-तनय-गणैस्तत्
सम्यक् शर्म विधेयम् ।। ध्रुवम् ।।

हिमगिरि-सीमन्तित-मस्तकमिदम्
अम्बुधि-परिगत-पार्श्वम्
अस्मज्जन्मदमन्नदमनिशं
श्रौतपुरातनमार्षम् ।। १ ।।

विजनितहर्षं भारतवर्षं
विश्वोत्कर्षनिदानम्
भारतशर्मणि कृतमस्माभिः
नवमिदमैक्यविधानम् ।। २ ।।

भारतहितसम्पादनमेव हि
कार्यं त्विष्टविपाकम्
भारतवर्जं न किमपि कार्यं
निश्चितमित्यस्माकम् ।। ३ ।।

भारतमेका गतिरस्माकं
नापरास्ति भुवि नाम ।
सर्वादौ हृदयेन च मनसा
भारतमेव नमाम ।। ४ ।।

- राधानाथराय्

## २६. समर्पये जीवनम्

समर्पये जीवनं सर्वथा
कायं वाचं धनम् ।
मातृभूमये पुण्यभूमये
समर्पये जीवनम् ॥

जननि लालितं त्वया पालितं
कौमारं कोमलं तव सेवार्थम् ।
गुणार्जनेऽहं समर्पये विमलम् ॥ १ ॥

त्वया पोषितं गुणगणसुभगं
प्रफुल्लमिव कमलं, तव पूजार्थम् ।
समर्पयेऽहं स्वयौवनं प्रबलम् ॥ २ ॥

नियतकर्मणा नीतिपथेन हि
धनमिह यदुपार्जितम् ।
गृहजनपोषणशेषं शेषं
जननि तदपि तेऽर्पितम् ॥ ३ ॥

– डा॰ श्री. भा. वर्णेकर



## २७. क्रियासिद्धिः सत्त्वे

क्रियासिद्धिस्सत्त्वे भवति महतां नोपकरणे ।
सेवादीक्षित ! चिरप्रतिज्ञ ! मा विस्मर भोस्सूक्तिम् ॥

न धनं न बलं नापि सम्पदा न स्याज्जनानुकम्पा
सिद्धा न स्यात् कार्यभूमिका न स्यादपि प्रोत्साहः
आवृणोतु वा विघ्नवारिधिस्त्वं मा विस्मर सूक्तिम्
॥ क्रियासिद्धिः ॥

आत्मबलं स्मर बाहुबलं धर परमुखप्रेक्षी मा भूः
क्वचिदपि मा भूदात्मविस्मृतिः न स्याल्लक्ष्याच्च्यवनम् ।
[illegible]ासादय ज[illegible]मानसप्रीतिं सुचिरं संस्मर सूक्तिम्
॥ क्रियासिद्धिः ॥

अरुणसारथिं विकलसाधनं सूर्यं संस्मर नित्यम्
शूरपूरुषान् दृढानजेयान् पदात्पदं स्मर गच्छन्
सामान्येतरदृग्भ्यस्सोदर, सिध्यति कार्यमपूर्वम्
॥ क्रियासिद्धिः ॥

– जनार्दन हेगडे

# २८. संस्कृतचमूः

चमूः प्रवृत्ता संस्कृतबन्धूनाम्
संस्कृतयष्टिधरा संस्कृतिधुरन्धरा ।।

न ताडयति कायं
न भेदयति हृदयम् ।
निर्मलमनसा संस्कृतवचसा
विकासयति चित्तम् ।। १ ।।

ग्रामे नगरे सञ्चरति
संस्कृतशिबिरं निर्माति ।
सम्भाषण-जागर्ति-हेतुना
पुरा नयति राष्ट्रम् ।। २ ।।

बाला वृद्धा गृहिणी गृहिणो
विहाय जातिवयोभेदम् ।
प्रसार्य लक्षायुतबाहून्
रक्षति संस्कृतजननीम् ।। ३ ।।

– गु. गणपय्यहोळ्ळः

# अस्मत्समीपे उपलभ्यानि

- व्यवहारसाहस्री (कन्नड/आंग्ल/हिन्दी-आवृत्तिः), अभ्यासपुस्तकम्, विभक्ति-वल्लरी, शतृशानजन्तमञ्जरी, अभ्यासदर्शिनी, सम्भाषणसोपानम्, कालबोधिनी, णत्वणिजन्तम्, सन्देशसंस्कृतम्, गुणनकोष्टकम्, संस्कृतसुलेखावली, बाल-केन्द्रम्, सन्धिः, समासः, कारकम्, बालतोषिणी, ललिलबोधिनी, शुद्धिकौमुदी, कौशलबोधिनी, भाषापाकः इत्यादीनि **शैक्षणिकपुस्तकानि** ।
- कन्नडसंस्कृतकोषः, हिन्दीसंस्कृतकोषः, आंग्लसंस्कृतकोषः, कन्नडसंस्कृत-क्रियापदकोषः, संस्कृतचित्रपदकोषः इत्यादयः **शब्दकोषाः** ।
- नवरूपकम्, जागरूको भव, कविकोपकलापः इत्यादयः **रूपकसङ्ग्रहाः** ।
- गीतसंस्कृतम्, गेयसंस्कृतम्, शिशुसंस्कृतम् इत्यादीनि **गीतपुस्तकानि** ।
- सुगन्धः, पञ्चतन्त्रकथाः, शृण्वन्तु कथामेकाम्, स्पन्दना, व्यूहभेदः अन्याः कथाश्च इत्यादयः **कथासङ्ग्रहाः**,।
- सुभाषितरसः, संस्कारसुधा, बाळदीविगे, मातृचेतन, मित्राय नमः इत्यादीनि **संस्कारदायकानि पुस्तकानि** । (कन्नडभाषया)
- धर्मश्रीः, सार्थः, अपश्चिमः पश्चिमे, ऋणविमुक्तिः, बाबासाहेब-आप्टे (व्यक्तिपरिचयः), भुवमानीता भगवद्भाषा, दृष्टिदानम्, क्रान्तिवीरः भगतसिङ्गः, युगावतारः इत्यादयः **दीर्घकथाग्रन्थाः** ।
- सङ्क्रमणम्, ज्ञाने धर्मः उत प्रयोगे, इदमित्थम्, ज्ञानदीप्तिः, परिवर्तनम्, पूर्णाङ्कं प्रति, संस्कृतभारती, उत्तिष्ठत मा स्वप्त, सप्तदशी इत्यादयः **वैचारिककृतयः** ।
- रसायनशास्त्रम्, भौतशास्त्रम्, आयुर्वेदः इत्यादीन् विषयान् अवलम्ब्य (आंग्लभाषया) ('भारतीयविज्ञानपरम्परा' इत्येषः तु संस्कृतेन) रचिताः **लघुग्रन्थाः** ।
- सम्भाषणसंस्कृतम्, गीतसंस्कृतम्, शिशुसंस्कृतम्, हितोपदेशकथाः, प्रयोगः, श्रीकृष्णजननम्, संस्कृतोज्जीवनम्, गेयसंस्कृतम्, अमरकोषः (समग्रः) (सान्द्रमुद्रिका) बालरञ्जिनी (सान्द्रमुद्रिका) इत्यादयः **ध्वनिमुद्रिकाः** ।
- स्वतन्त्रतया संस्कृताभ्यासार्थं **सान्द्रमुद्रिका** । (C.D.Rom)
- एतदतिरिच्य विविधानि संश्लेषकाणि, शुभाशयपत्राणि, भाषाभ्यासाय सज्जीकृतानि वैज्ञानिकांशयुक्तानि च भित्तिपत्राणि इत्यादीनि ।

रू. ८/-

ISBN - 978-81-88220-06-X